# दिव्यज्योतिः

संस्कृतस्य सचित्रमासिकम्



डा० श्रीसत्यव्रतशास्त्रिणः श्रीरामकाव्यम् इत्यस्य महाकाव्यस्य प्रणेतारः विश्वविख्याताश्च संस्कृतस्य विद्वांसः दिल्ली सं. अकादम्या सम्मानिताः । वर्धापनानि ।

शिमला अप्रैल, १९९२

वर्षम् ३६ अङ्कः ७

# दिव्यज्योतिः

संस्थापितम् १९५६
प्रधानसम्पादकः:—
आचार्य केशव शर्मा



संस्थापकाः तथा
आद्यसम्पादकाः
आचार्यश्रीदिवाकरदत्त
शर्माणः,
राष्ट्रपतिसम्मानिताः

(पत्रमिदं हि०क० सं० भा० अकादमी प्रदत्तानुदानसाहाय्यम् । पत्रिकागत-मुद्रणदोषाणां सम्पादकीयनीति-विषये च अकादमीदायित्वं नास्ति )

हिमाचल प्रदेश—पंजाब - हरियाणा-जम्मूकश्मीर - मध्य प्रदेश—राजस्थान—महाराष्ट्र उत्तरप्रदेश शासन-स्वीकृतं केन्द्रशासनपुरस्कृतं सचित्रं संस्कृतमासिकम् ।


## पत्रस्य उद्देश्यानि तथा नियमाः

सरलसरससुबोध-साधनैः सर्वस्मिन् संसारे संस्कृतस्य प्रसारः, साहित्यान्तर्गतानां सकलकलानां समन्वेषणं, संसारस्य हितसम्पादनम्, एव लौकिक - अलौकिकस्वातन्त्र्यस्य प्राप्तिः ।

"दिव्यज्योतिः" प्रतिमासं पञ्चदशतारिकायाम् (आङ्गलमानेन) प्रकाशितं भवति

पत्रस्य वार्षिकमूल्यं ३५ रु० अर्धवार्षिकं १८ रु० एकस्याङ्कस्यच रु० २-५० भवति ।

वर्षारम्भः अक्तूबरमासतः भवति ग्राहकः कस्मादपि मासाद् भवितुं शक्नोति । ग्राहकैः, "सम्पादक, दिव्यज्योतिः, भारती विहार, मशोवरा, शिमला-१७१००७ इति संकेते धनादेशेन वा. शु. प्रेषणीयम् ।

## विषयानुक्रमः

# रसस्वरूप–समीक्षणम्

## (साहित्यिकं पर्यालोचनम्)

गङ्गाधरशर्मा दर्शनाचार्य, साहित्यचार्य, एम. ए.



१. जगत्यस्मिन् रसनेन्द्रिय - ग्राह्याः मधुर-लवण-कट्वादयो गुणाः रसाः कथ्यन्ते । कवि-जगति काव्यनाटकादिदर्शनश्रवणात्स-हृदयानां हृदिस्थः रति-हास-शोकादिस्थायिभावः एव विभावा-नुभाव - संचारिभिरभिव्यक्तः रसः कथ्यते । तथोक्त दर्पण-कारेणापि—

२. विभावेनानुभावेन व्यक्तः संचारिणा तथा ।
रसतामेति रत्यादिः स्थायिभावः सचेतसाम् ।।

नायकनायिकादयो विभवाः प्रोच्यन्ते । भ्रू विक्षेपादयोऽनुभावाः । निर्वेदादयश्च सञ्चारिणो भवन्ति । स्थायिभावः वासना रूपो भवति ।

विभावानुभावसञ्चारि - स्थायिभावानाञ्च वैलक्षण्यपूर्णं समूहात्मकमास्वादनमेव रसः कथ्यते ।

३. नत्वयं रसः दीपेन घट इव व्यज्यते । दुग्धस्य दध्यादिरूपेण परिणतेरिव रत्यादिस्थायिभावा ज्ञान–विषयका एव रसाः प्रोच्यन्ते । दुग्धादिरूपाः रत्यादयाः स्थायिभावाः, तक्ररूपाश्च विभावानुभावादयश्च तावदेव पृथक्तया स्वाद्याः भवन्ति यावन्नै-षामास्वाद्यभावनयैकत्वञ्जायते एषामेकत्वे सति रसत्वेनैते-परिणमन्ति । ४ रसश्चायं स्वप्रकाशरूपोऽखण्डाद्भुतानन्दचिद्रूपो भवति वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरश्च भवति । सत्त्वोद्रेकाद्रसोऽयमेतादृशो भवति । तत्र रजस्तमस्यमिभूय सत्त्वगुणस्योदयः सत्त्वोद्रेकः व्यपदिश्यते ।

अनेन विभावाख्येन व्यापारेणैव रसस्यप्रपानक रसवदास्वाद्यमानत्वादलौकिकत्वम् । यथा प्रपानकाख्यपेयपदार्थः खण्डमरिचादि-सम्मिलितोऽन्यमेवास्वादं प्रकटयति तथैव विभावादयोऽपि मिलिताअपूर्वमास्वादञ्जनयन्ति । इत्थं विभावादिभिरभिव्यक्तः रत्यादिस्थायिभाव एव रसतामेति ।

अलौकिकानिर्वचनीयस्यास्य रसस्य सत्तायां सहृदयानाञ्चर्वणैव प्रमाणमस्ति । आस्वादानुभवः चर्वणा कथ्यते । चर्वणायाः रसेनैकत्वान्नेयं कार्यरूपा कादाचित्कतया कार्यत्वमस्याः प्रोच्यते । अस्याः रसेनैकत्वे सति (रसेऽपि) कार्यत्वमुच्यते ।

वाच्य लक्ष्यार्थभिन्नोऽयं रसः व्यञ्जनया व्यङ्ग्यः ।

रत्यादयो मिलिताः एव रसस्तेषाञ्च स्वप्रकाशत्वन्तत्कथं रसस्याखण्डत्वं स्वप्रकाशत्वम्भवितुं शक्यते, एतन्न शङ्कनीयम्, रत्यादीनां ज्ञानेनतादात्मयाद्रसोऽयं ज्ञानस्वरूपः एव । ज्ञानस्य स्व प्रकाशत्वमखण्डत्वञ्च सिद्धमेव । अतो रसस्यापि स्वप्रकाशत्वमखण्डत्वञ्च सिद्धयति ।

ज्ञानं तादात्म्याद् वेदान्त-प्रसिद्ध ब्रह्मतत्त्ववदय रसोऽखण्ड एव ।


— अध्यापक
राजकीय उच्च पाठशाला
गोखड़ा जि. मण्डी (हि० प्र०)




---

१. साहित्य दर्पण विमलाख्य हिन्दी व्याख्यायाः भूमिका-पृष्ठ-११ ।
२. सा. द. तृतीय परिच्छेद कारिका १ ।
३. सा. द. विमलाख्य-व्याख्या पृष्ठ-४६ ।
४. सा. द. तृ. प. कारिका—२ ।
५. सा. द. विमलाख्य—व्याख्या पृष्ठ ४६ ।
६. सा. द. भूमिका पृष्ठ १२ ।
७. सा. द. तृ. प. विमलाख्यव्याख्या पृष्ठ ४६ तः ६४ पर्यन्तमध्ययनम्मूलपाठानुशीलनञ्च ।

एकाङ्किरूपकद्वयी

## हाला

प्रो. केशव शर्मा



### प्रथमदृश्यम्

(मञ्चः भारतीयसंस्कृतिद्योतक—सज्जाभिः सुशोभितः यथास्थानं भवानीचित्रं बृहदाकारं नाट्यगृहोपस्थितदर्शकगणैः सुवीक्ष्यम् । धूपसुवासितः दीपप्रकाशितः मञ्चः । [illegible] संगीतज्ञाः—नाटकाभिनेतारः वा प्रभावपातकं दृश्यं समुपस्थापयन्तः [illegible] स्तुवन्ति मातरम् । सायंकालः)

त्रिपदो

त्वामाह्वयन्ति एते मातस्त्वदीयपुत्राः ।
येनास्य भारतस्य त्वम्—एव पालिकासि ॥

नहि भारतस्य—एव परमस्य सकलजगत।   ।
जननी, सुखाशया त्वं वृद्धापि बालिकासि   ।।

सर्वेऽथ राक्षसा: ये किल दोषराशिपूर्णा:   ।
निहतास्त्वया स्वशक्त्या कणश: कृताश्च चूर्णा: ।।
मातस्त्वमत्र स्थित्वाऽस्माकं हि सर्वदोषान्—
परिनाशयस्व शीघ्रं त्वं शक्तिमालिकासि ।।

देवास्तु शक्तिमन्तस्तव शक्तिदानतो वै   ।
सफलं भवेत् प्रयुक्तमिदं रूपकं कृपामयि ?
त्वं शारदा च लक्ष्मी: परमाथ कालिकासि ।।

पटाक्षेप:

ततः प्रविशति सूत्रधार:

सूत्रधार: —अयि सभ्या। ? वयमद्य पत्रकारिताऽध्यापनपुराणवाचनव्याख्यान्-प्रबन्धकत्वकथा — निबन्ध-काव्य - गीतनाटकलेखनादिविविधक्षेत्रेषु कृतप्रवेशेन प्राध्यापकश्रीकेशवशर्मणा विरचितमिदमेकाङ्कं हाला नाम रूपकमभिनेतुमत्रागता: । तत्तावदवलोकयतामेतस्य प्रथमं दृश्यम् ।

## पटोत्थानम्

[कमलेश:, हिमेश। सुरेशश्च मञ्चासीना: मध्ये २ विविधभावानां प्रदर्शनं कुर्वन्ती रूपराशिरेका नर्तकी वाद्यवादवसहितं नृत्यन्ती ]

हिमेश: — (सुरा काचकूपीमुद्घाटयन् स्वकीये पात्रे किञ्चित गृहीत्वा सुरेशस्य पात्रं पूरयति )

कमलेश ! त्वमपि गृहाणेमां सकलजगदानन्ददां सुराम् ।

कमलेश: —भवन्तावेव पिवतं नाहं पिवामि, न चैव पास्यामि । मया पूर्वमेवेदं निवेदितमासीत् भवतां गृहे सुरा-सुन्दरी गोष्ठ्यां नाहमागमिष्यामि ।

सुरेश:—(हास्यं नाटयन्) अरे ऽयं वराक: किं जानीयादस्या मदनोत्सवकारि उन्मादम् । (तस्य भुजां गृह्णन्) रे रे गृहाणेमां गृहाण, लज्जा न कार्या ?

कमलेशः— (घृणां नाटयन्) सुरेश ! त्वं सम्यक् जानासि नाहं सुरां सेवे। मया कतिवारं भवन्तावपि प्रेरितौ यदस्याः पानेन देशस्यापूरणीया क्षतिः प्रतिदिनं भवति न जाने कति संख्यकपरिवाराः प्रणष्टाः……अस्याः कुप्रभावेन कियन्तश्चाहरहः प्रणश्यन्ति ?

हिमेशः— (सुराप्रभावमुग्धः) रे रे उपदेशक, अलं तावदनेनोपदेशेन चेदस्माकमानन्दोत्सवेऽस्मिन् — कार्मपि वृद्धिं न कर्तुं पारयसि तर्हि किमर्थं व्यर्थमेवात्र बाधमुपस्थापयसि (साभिनयं नर्तकीं स्वाङ्के उपवेशयन्)

कमलेशः—(चिन्तापूर्णमुद्रायाम् ।)

सुरायाः कुप्रभावेन बुद्धिनाशस्तु जायते ।
परं साम्प्रतमेतस्य देशस्यैव प्रजायते ।
न जाने च पिपासेयं कदा स्त्रीपीड़नं त्यजेत् ।
तासां स्वर्गसुखं छित्वा, नीचैर्नयति तत्क्षणात् ॥

पटाक्षेपः

## द्वितीयम् दृश्यम्

(रेडियो—दूरदर्शन-शीतातपसाधकयन्त्र—ध्वनि-अंकनयन्त्र—दूरभाषादिभिः सर्वसाधनैः सुशोभितकक्षः । समयो रात्रिः ।)

सुशीलः—(घटिकामवलोकयन्) एकादशवादनेऽपि कमलेशो नायातः ।

सुधीरः—किमसौ त्वया आहूत आसीत् ?

सुशीलः—अथ किम् ?

सुधीरः—किमर्थम् ?

सुशीलः—सुधीर ! किं त्वं न जानासि यदसौ-एवास्माकं मित्रेषु तादृशोऽस्ति यस्माद्वयं सततं भयविह्वलास्तिष्ठामः ।

सुधीरः— तत्कथम् ?

सुशीलः— अन्ये सर्वेऽपि - अस्मदीयाः सुहृदः स्वीयेषु विभिन्नकृष्णकर्मसु संलग्नाः अयञ्च-एवंविधकार्येषु न विश्वसिति अस्मानपि च निषेधयति ।

सुधीरः—तर्हि किं तत्र भयकारणम् ?

सुशील:—यदसौ कदापि - प्रशासनं सूचयितुं शक्नोति येनास्मदीयाभि-
ग्रहणं, निगड़नं किमपि भवितुं शक्यते।

(उभौ धूम्रपानमत्तौ सुरां पिबन्तौ तिष्ठत: एतन्मध्य एव कमलेशस्य प्रवेश:)

कमलेश:—(प्रविशन्नेव) रे रे धूर्तौ किमर्थमेनां राक्षसीं सेवथ: ?

सुधीर:—(कुहासपूर्वकम्) कमलेश ! आगच्छता एव त्वयाऽस्माकं रक्ता-
म्बरी कथं निन्द्यते। अस्माकं जीवनमेषा।

सुशील:– (उभयोर्मध्ये) व्यर्थमेव न कलहो विधेय: । कमलेश ! अहं
किञ्चित्प्रष्टुमिच्छामि ।

कमलेश:— नूनं नूनं, पृच्छ्यताम्।

सुशील:—त्वमपि–अस्माकमिव - आनन्दसाधनसंग्रहेण किमर्थं न स्वा-
त्मानमनुगृह्णासि ? प्रियवर ! आगच्छ, अस्माकं सहायको
भव ।

कमलेश:— (गाम्भीर्येण) आनन्द: संसारस्य साधनेषु नास्ति सुशील ?
अनन्ता पृथिवी अनन्तानि च साधनानि। आनन्दस्त्वात्मसाधनेऽस्ति।
अहन्तु-इदमेव कामये—

"अहौ वा हारे वा कुसुमशयने वा दृषदि वा।"
मणौ वा लोष्ठे वा मम समदृशो यान्तु दिवसा: ।।

भवद्भिरपि मार्गोऽयमनुसर्तव्य: । एषु कृष्ण-कर्मसु देशद्रोह:
आत्मशान्तिनाशश्च । अतोऽलमनेन। मया सह एतन्न विचार्यम्।

सुशील:– एकस्मिन् - दिवसे त्वमवश्यमेवास्माकं समूहे मिलिष्यसि
कमलेश ? अथवा कंटकशोधनमेवास्माभिर्विधेयम्। न वंशी न
वंशीवादनम्। (सुशीलसुधीरौ व्यङ्ग्यपूर्वकं हसत:।)

पटाक्षेप:

## तृतीयदृश्यम्

त्रुटितं प्रस्फुटितं गृहम्। प्रात: काल:। शय्यायां हिमेश: अर्धनिमीलित
लोचन:। शनै शनै: पीड़ाभिराक्रन्दन्।

हिमेशः— (सरुजम्) अस्ति कश्चित् ?

सुषमा:— (परोक्षात्) अहमस्मि सुषमा (दुग्धपात्रमाहरन्ती प्रविशति) पिवतु किञ्चिदद्दुग्धम् ।

हिमेशः— (तथैव तन्द्रायमाणः अस्पष्टम्) सुषमा, किञ्चित्सुरां देहि नाहमिदं दुग्धं कामये ।

सुषमा:- (दुःखद्रारिद्र्यदीना) स्वामिन् न जानेऽधुनापि कथं न भवान् सर्वनाशकरीमिमां हालावालां परित्यजति ।

हिमेशः — (तथैवास्पष्टभाषायाम्) सुषमे ! नाहमेनां त्यक्तुं क्षमोऽस्मि न चैषा मां परित्यजति ।

सुषमा:— स्वामिन् ? एवं न वाच्यम्, राजयक्ष्मया निष्पीडितोऽपि भवान्-न किमपि सुमार्गमनुसरति तत एवैषा दशा भवतः, भवता स्वजीवनार्थे यदि नैषा परित्यज्यते तु अस्मद्ध्यानमेव कर्तव्यम् अहमावयोश्च सन्ततियुगलम् एतस्य किं भविष्यति ?

हिमेशः- सुषमा, बहुबारमहं कमलेशेनापि वारितः आसम् । अस्मत्-सुहृत्सुरेशोऽपि अनयैव हतः । अद्य तस्य पत्नी वारयोषिज्जाता पुत्री चैकला आसीत् सापि तत्पथगामिनी, सत्यमस्ति बुभुक्षितः किं न करोति पापम् ।

सुषमा :- (सकरुणम्) परन्तु भवान् तु बुभुक्षितः अपि नास्ति । सर्वमपि सुखमयजीवनं स्वीयमस्मदीयञ्च भवता जानतापि कियत्कष्ट-पारावारे निपातितम् ?

हिमेशः- (विकृताननः रुदन्) सत्यमस्ति सुषमे, सत्यम् । मम, तव, सन्तति-युगलस्य च सर्वस्यापि जीवननाशो मया स्वयं कृतः, किं करणीयमिदानीं महीयान् विलम्बो जातः अहं महाप्रयाणं कुर्वन्नस्मि अहम्...अ...ह...म् ।

पटाक्षेपः

## चतुर्थदृश्यम्

(ग्रामस्थगृहम् भारतीयसंस्कृति - अनुरूपा प्रकोष्ठसज्जा । मध्याह्नः कमलेशस्तत्पत्नी ज्योत्स्ना चोपविष्टौ द्वारघण्टिकाया ध्वनिः । ज्योत्स्ना द्वारं

गत्वा स्वागतं व्याहरति । स्त्रीयुगलं प्रविशति कमलेशः स्वागतार्थमुत्तिष्ठति ततश्च सर्वे स्व स्व आसने उपविशन्ति)

कमलेशः- (स्वाभाविकरूपेण) भ्रातृजाये ? सुषमा-मनोरमे, अद्य वहोः कालात् भवद्दर्शनं जातम् अपि कुशलं सर्वम् ?

सुषमा :- (क्षीणा) कमलेश, क्व कुशलं, तव भ्राता हिमेशः सुरासुन्दर्या गृहीतः अहञ्च वत्सद्वयेन सह कथञ्चिज्जीवामि धनं गृहं सर्वमपि सुरायै समर्पितं - अवशिष्टञ्च रोगाय ।

कमलेशः- (साश्चर्यम्) अहो नु खलु-अनभ्रवज्रपातः अस्तु मनोरमे भवती तु परमवैभवमयजीवनं यापयति किमु तत्रापि अकुशलम् ?

मनोरमा :- भ्रातः किं कथनीयम् ? तव भ्राता सुशीलो यद्यपि परितः स्वर्णरत्नमयकोषैरलंकृतस्तथैव चाहमपि स्वल्पकालाय तथा आस्ताम् । इदानीं प्रशासनेन निगड़ितोऽसौ अनेकेऽभियोगास्तद् विरुद्धं सन्ति । क्वचिच्चौर्यस्य क्वचिच्च हत्यायाः आजीवन-कारावासेनासौ दण्डितः ।

कमलेशः—ततस्ततः ?

मनोरमाः–इत्थं सर्वं धनं प्रणष्टम् । अन्यत् - अवैधधनञ्च प्रशासनेन गृहीतम् । इदानीं भोजनस्यापि कार्यं न प्रचलति तत एव तव पार्श्वमायाता ।

कमलेश :- (चिन्तां नाट्यन्) मया बहुवारमुभावपि तौ यथावसरं प्रेरितौ कुपथपरित्यागाय परं न ताभ्यां मामकीनं किमपि श्रुतम् । अहन्तु ज्योत्स्नया साकं सानन्दं जीवनं यापयामि ।

ज्योत्स्ना:– भगिन्यौ ! भवतीभ्यां न कापि चिन्ता कार्या अस्माकं पार्श्वे प्रभूता भूमिः अन्नस्य, शाकानां दुग्धस्य च न कापि न्यूनता ।

कमलेशः— परं वयं साधारणग्रामीणाः स्मः ।

सुषमा :—कमलेश! किमर्थं लज्जयसे । भवतां सुखमयमिदमादर्शजीवनं को नाम न कामयते ?

ज्योत्स्ना:– भवत्यौ - अस्माभि: साकमत्रैव स्थितिं कुरुत: ।

कमलेश :– नूनमेवात्र निवसनीयं भवतीभ्याम् ।

मनोरमा :- भ्रात: ! भवान् देवतुल्यस्तथापि - यदि अस्माकं कापि सहायता भवता क्वचित् आजीविकादाने कर्तुं शक्येत तु अनुगृहीते भविष्याव: ।

कमलेश :- तत्र भवत्यौ किञ्चित्कालाय मम पार्श्वे स्थितिं कुरुत: अहं यथाशीघ्रं क्वचित् ग्रामविद्यालये भवत्यो: आजीविकाप्रबंधं करिष्यामि ।

(तत: सर्वेऽपि सस्मितमानन्दानुभवं कुर्वन्ति यावत पटाक्षेपो भवति)

।। इति शम् ।।

---

## साक्षरता

निरक्षरो निरीह:
कृषक: पठनार्थं
प्रेरितो मया
अवदत् बन्धो ?
रात्रिन्दिवा कर्मरतोऽपि
रिक्तोदरोऽहं
तव वचनग्रहणेऽक्षम:
सहानुभूतिं प्राप्य
अनुगृहीतोऽस्मि ।
तस्य मुखमुद्रा
वचनस्पष्टता च
मह्यं कस्मादपि पाठात्
न्यूनं नासीत् ।

## आतंकासुर:

आतंक: निरातङ्क:
नग्न: निशङ्क:
राष्ट्रेस्मिन्वर्धते
वृत्र इन्द्रायते
स्वर्ग: नरकायते ।

— लेखराम शर्मा
प्रवक्ता रा सं, मा वि.
सोलन-१७३२१२
(हि. प्र.)



गीयताम्

# सञ्जीभूता सिन्धोर्बाला

दीपावल्यां पुंसां चित्तं
कस्मान्न स्याद्धर्षे मग्नं
प्रेक्ष्या सर्वैस्तस्यां रात्रौ
सञ्जीभूता विद्युन्माला ।१।

द्यूते दक्षैः प्राप्तं सर्वं
धूर्तैरक्षैर्नष्टं सर्वं
हेया सर्वैस्तस्यां रात्रौ
सञ्जीभूता द्यौतीशाला ।२।

मित्रैः सार्धं पीता हाला
नित्यं क्रीता भोग्या बाला
त्याज्या सर्वैस्तस्यां रात्रौ
सञ्जीभूता हाला बाला ।३।

अग्नेः साक्षौ पाणिं धत्ते
सैषा कान्ता भाग्यं धत्ते
सेव्या सर्वैस्तस्यां रात्रौ
सञ्जीभूता मुग्धा बाला ।४।

प्राप्तं वित्तं शान्तं चित्तं
जोषं जोषं क्षावं दत्तं
पूज्या सर्वैस्तस्यां रात्रौ
सञ्जीभूता सिन्धोर्बाला ।५।

—

— तारा शंकर शर्मा
महाराणा संस्कृत कालेज जयपुर (रा० स्था)



# सत्ताचक्रम्

## १ मम् दृश्यम्

(मुख्यमन्त्री स्वकीये भवने पञ्चमन्त्रिभिः सह सायं चतुर्वादनवेलायां मन्त्रयन)

मुख्यमन्त्रीः—मत्सहयोगिनः सदस्याः, इदानीं मामकीनं मन्त्रिमण्डलं विचलितमस्ति । मदीये मुख्यमन्त्रित्वकाले भवद्भिरानन्दः कृतः। इदानीं न जाने को मुख्यमन्त्री भविता ?

एकोमन्त्रीः— नैब नैव श्रीमन् भवानेवास्माकं मुख्यमन्त्री ।

द्वितीयः – आम् महोदय न कश्चिदपि भवत् सिंहासनोत्पाटने शक्तो भविष्यति । अस्माभिः सर्वात्मना भवत्पक्षग्रहणं करिष्यते ।

मुख्यमन्त्रीः— एतत् सत्यम् - यद् भवद्भि र्मदीय एव पक्षः गृह्यते परन्तु असन्तुष्टानां विषयस्तु परमचिन्तनीयः । ते तु मामकानमासनमुत्पाटयितुं कृतप्रतिज्ञाः ।

अन्ये सर्वे:— तेषां प्रतिज्ञां वयं त्रोटयिष्यामः । न ते भवतां मुख्यमन्त्रित्वं छेत्तुमर्हाः ।

मुख्यमन्त्रीः— कोऽत्राभ्युपायः ?

एकः—उपायस्तु भवद्भिरेव आदेष्टव्यः । यतोहि भवान्-अस्माकं मुख्यनायकः । तदनुसरणमस्माकं कर्तव्यम् ।

सर्वे: — आम् सत्यमिदं, सत्यमिदम् ।

मुख्यमन्त्री :– अत्रोपाय एकोऽधुनैव मम मनसि समागतः ।

अन्य :– शीघ्रं निवेद्यताम् । वयं तच्छिरसा वोढुमुत्सुकाः स्म ।

मुख्यमन्त्रीः— यदि कटुनिर्णयो भवेत्तदा ?

चतुर्थः—कटुरपि मधुरमिव भक्षणीयं भवति तस्यापि स्वीयः पृथक् स्वादः ।

मुख्यमन्त्री :- तर्हि श्रूयताम् ।

(सर्वे सावधानाः)

अहं यदि युष्मासु कांश्चिन्मन्त्रिपदतो मोचयेयम् ?

(सर्वे उदासीना मौनाश्च) उत्तरं दीयताम् सहयोगिनः ?

एक :-विचार्य उत्तरं दास्यामि ।

सर्वे :—उदासीनाः वयमपि तथैवोत्तरं दास्यामः ।

## द्वितीयदृश्यम्

(असन्तुष्टविधायकनिवासस्यैककक्षः । समयः प्रातः-दशवादनस्य असन्तुष्ट विधायकनेता भाषते )

असन्तुष्टविधायकनेता :-सहयोगिनः, इदानीं कालः समायातोऽस्ति । अयं मुख्यमन्त्री परिवर्तनीयः अत्याचार-रतः जनानां न किमपि कल्याणं कुरुते ।

विधायक जनसम्मर्दत एकः- जनानामस्माकम् वा ?

एका :-महोदय मैवम् । अस्माकं किम् । अस्माभिस्तु सर्वं लोकहिताय हुतम् ।

अन्य :- (सव्यङ्ग्यस्मितम्) सत्यम् श्रीमन्, सत्यम् अक्षरशः सत्यम् ।

अ. ने. :-भवद्भिश्चेदहं मुख्यमन्त्रिपदारोहणे समर्थः क्रियेत तदा भवत्सु कांश्चिन्मन्त्रिण अपरान् संसदीयसचिवान् इतरान् - च विधि-मण्डलादि - अध्यक्षानुपाध्यक्षान् च निमस्ये (सर्वेऽसन्तुष्टविधायकनेतुः जयकारं कुर्वन्ति)

अ. ने.: —तर्हि यथा किल मूषका समुत्खननेन भूमिखण्डं विदारयन्ति निःसत्वञ्च कुर्वन्ति तत् तथैव युष्माभिरपि उत्कोचेन केचन विधायकाः समाकर्षणीयाः, मिथ्याक्षेपविक्षेपैर्निरुत्साहनीयश्च

मुख्यमन्त्री । प्रशासनस्य मुख्यमन्त्रिविरोधि अधिकारिण: तथा प्रेरणीया यथा प्रशासनं शिथिलं मुमुर्षुरिव भवेत् । सत्यासत्यसर्वविधदोषारोपणैराच्छादनीयो मुख्यमन्त्री ।

सर्वे :—तथा करिष्याम: ।

## तृतीय दृश्यम्

(मुख्यमन्त्री स्वप्रासादकक्षे सहयोगिभि: मन्त्रयन्)

मुख्यमन्त्री : –(गम्भीर: चिन्तितश्च) सहयोगिन:, पूर्वमपि मया भवन्तोऽस्मिन् विषये प्रतिबोधिता यत्कथमिदमासनं सुरक्षितं स्यात् । इदानीं भवद्भिर्विचारोऽत्र कृतो भवेत् ।

एक:—अस्माभिर्विचारितं यत् - यदि भवद्भिरस्माकं पदच्युति: क्रियते तदा भवद्भि: साकमस्माकं स्थितिर्दुष्करा भविष्यति यतोहि असन्तुष्टदलोऽप्यस्मान् विभिन्नपदानि दातुं कथयति ।

द्वितीय:— आम् श्रीमन् । केचन भवन् मन्त्रिमण्डलसदस्यास्तु तत्र विरोधिभि: साकं मिलिता अपि ।

तृतीय :— श्रीमन्, असन्तुष्टा: कथयन्ति यद्यहं तेषां पक्षे गच्छेयं तु ते मां मुख्यमन्त्रिपदे समारूढं करिष्यन्ति ।

मुख्यमन्त्री: — अहो चरित्रभ्रष्टता अस्माकं सहयोगिनाम् ? (किञ्चित विचार्य) क्षन्तव्योऽस्मि भवद्भिरहम् । व्याकुलोऽस्मि जात: एभिरागतरामै: गतरामैश्च किं कुर्याम् कथमिदं पदं सुरक्षितं क्रियते । (दीर्घं नि:श्वस्य) अस्तु तावत् भवद्भिस्तु स्वपदे एव स्थातव्यम् । अन्यानपि विभिन्नविभागेषु नियोजयेयम् । अनेन राज्यव्ययस्तु वर्धिष्यते । तत्पूर्तये करेषु वृद्धिं करिष्यामि मदीया का हानि: । लोकानामेव हानिरत्र भविष्यति । मत्सकाशात्तु सर्वेऽपि विधायकाश्चेत् मन्त्रिण: स्युस्तदापि मया रक्षणीयमिदमासनम् ।

सर्वे :- शोभनं श्रीमन् शोभनम् । आसनप्रकरणमिदम् । इत्थं न कोऽपि भवदासनं ग्रहीतुं शक्ष्यति ।

( अपक्रामन्ति सर्वे )

## चतुर्थदृश्यम्

(असन्तुष्टविधायकैः साकं मन्त्रयन् मुख्यमन्त्री ।)

मुख्यमन्त्री :— (प्रश्नवाचक मुद्रायाम्) मान्यसदस्याः किमर्थं भवन्तो ऽसन्तुष्टाः ?

एकः अ. वि :—भवद्भिः स्वीयाः सम्बन्धिनः समर्थकाश्च महत्वपूर्णपदेषु नियुक्ताः—अस्माकञ्च तत्र सर्वथोपेक्षा कृता । अस्मदीया सम्बन्धिनोऽपि यत्र तत्र नियोक्तव्या आसन् ।

मुख्यमन्त्री :— एतत्सर्वं मिथ्या वर्तते । मया न केऽपि स्वीयाः बन्धवः क्वापि नियुक्ताः । न च कोऽपि कमपि विधानमुल्लंघ्य नियोक्तुं शक्नोति । सम्वैधानिकरूपेण पात्रत्वात्— ये मदीयाः सम्बन्धिनः स्युरथवा मित्राणि तेभ्यः सर्वेभ्योऽपि स्वकीया-जीविकार्जनस्य वर्तते पूर्णोऽधिकारः तत्र कीदृशः पक्षपातः ?

द्वितीयः अ. वि.— मान्य मुख्यमन्त्रिवर ? नैतेनास्माकं सन्तोषो भविष्यति । चेदस्माकं सम्बन्धिनः यथेच्छपदेषु नियोक्तुं न शक्यन्ते तर्हि – अस्मभ्यं मन्त्रिपददानन्तु कर्तुं शक्यते । तेन वयं सन्तुष्टाः भविष्यामः ।

मुख्यमन्त्रीः—किं सर्वेऽपि विधायकाः मन्त्रिपदेनियोक्तुं शक्यन्ते ?

अपरः अ. विः—तत्तु वर्तते भवदाधीनम् । नास्ति तत्र कोऽपि बाधः ।

मुख्यमन्त्रीः— तत्र लोकानां का प्रतिक्रिया भविष्यति ?

अ. वि. :—लोकैरेतदर्थमेव वयमंत्र निर्वाचिताः । मन्त्रिवर ? भवद्भिः स्वयमपि—आनन्दो विधेयः सर्वेषाञ्चास्माकमपि कल्याणं विधेयम् । अग्रिमनिर्वाचने यदि लोका अस्मभ्यं मतदानं न करिष्यन्ति तर्हि किम् ? धनबलेन सर्वं सेत्स्यति ।

मुख्यामन्त्री :—शुभोऽयं भवतां विचारः परन्तु नास्य प्रचारो विधेयः । नोचेद् विरोधिदलीयाः सक्रियाः भविष्यन्ति । सत्तापरिवर्तने च विलम्बो न स्यात् ।

सहायकः —(एक स्वरेण) साधु भवान् साधु ।

मुख्यमन्त्री:—गम्यतां तर्हि विचारयिष्यामि भवतां प्रस्तावानपि ।
(सर्वे गच्छन्ति केवलं मुख्यमन्त्रिसहायकस्तिष्ठति ।)

सहायक: — (चिन्तामग्नं मुख्यमन्त्रिणं प्रति) अमात्यवर ! न कापि चिन्ता कार्या एते सन्ति सत्ताधीनाः दीयताम् एतेभ्यः कानिचन लाभकरपदानि । सन्तुष्टाः भविष्यन्ति सर्वे ।

मुख्यमन्त्री :— परन्तु एवं शासनं कथं चलिष्यति ?

सहायक :— एवं करणीयं येन सर्पोऽपि म्रियेत यष्टिकापि च न त्रुटिता भवेत् ।

मुख्यमन्त्री :— (प्रश्नमुद्रायाम्) तत्कथम् ?

सहायक :— केषांचन सम्बन्धिभ्यः पणार्पणं (Contract) देयं तत्र तत्र राजकीयनिर्माणेषु । केचन धनलाभपदेषु नियोज्याः । भवद्भ्योऽपि धनमाहरिष्यन्ति स्वयमपि चानन्दं करिष्यन्ति भवतां नाम चापि क्वापि नागमिष्यति ।

मुख्यमन्त्री :—नैव नैव नाद्य किमपि गोप्तुं शक्यते । विरोधिनः पातालादपि सूचनां प्राप्नुवन्ति ।

सहायक:— तर्हि किम् ? मानवजीवनमूल्यममूल्यं जातमस्ति । तं न कोऽप्यवलोकयति धनाधीनं सर्वम् । अतस्तदर्थमेवोपायः श्रेयान् साधनानां शुद्धिरशुद्धिर्न विचार्या ।

मुख्यमन्त्री:— (श्रान्तिं नाटयन्) प्रियवर ! श्रान्तोऽस्मि जातोऽद्य । विचारयिष्ये सर्वं पश्चात्, गम्यतामधुना ।

(पटाक्षेपः)



# एड्स भयंकररोगः उपचारश्च

— सुरेश आचार्यः



संसारेऽस्मिन् समस्तस्त्रीपुरुषयोः प्रणयसम्बन्धे महत् अनुसन्धानानन्तरं इदं दृश्यते यत् तयो सम्बन्धे निश्चित किमपि ईश्वरीय-विधानम् अलौकिकप्रेरणा च भवतः। परं यः प्रेमसम्बध कामवासना-रहितः विशुद्धप्रणययुक्तो भवति स एव सफलः। यत्र प्रथमदर्शनेनैव द्वयोः हृदयमुत्कण्ठितो भवति तदेव जन्मजन्मान्तरसम्बन्धः। यथा तुलसीरामायणस्य बालकाण्डे सीतारामयोः प्रथमदर्शनावसरे सीता रामं दृष्ट्वा भवान्याः चरणयोः पतित्वा निवेदयति :-

"मोर मनोरथु जानहुनीकें वसहू सदा उर सबहीकें।
कीन्हेऊँ प्रगट न कारन तेहीं अस कहि चरन गहे वैदेही।

रा. च. मा. बालकाण्ड

कविकुलगुरुकालिदासेनापि अभिज्ञानशाकुन्तलनाटके शकुन्तला-दुष्यन्तयोः विषये इदृशएव अलौकिकसम्बन्धः प्रदर्शितः। परं तेन शकुन्तलादुष्यन्तयो विरहप्रसङ्गेन स्पष्टी कृतम् यत गान्धर्वविवाहः भारतभूम्यां सफलो नास्ति। यस्मिन् विवाहसम्बन्धे मातापितृसहमतिः, देवतानां आशीर्वादः सूर्य-चन्द्रनक्षत्र-भग-अर्यमाऽग्न्यादिदेवतानां साक्ष्य सएव सफलो नान्यत।

पाश्चात्यदेशानाम् संस्कृत्यान्धानुकरणेन विद्यालयमहाविद्यालयविश्वविद्यालयाश्च स्वच्छन्दयौनाचारस्य केन्द्रानि नारीणां मुक्त-जीवनस्य वाञ्छा, मुक्तभोगः, मुक्तकेशाः, मुक्तलज्जा, आधुनिकताया मदः गान्धर्वविवाहार्थं प्रेरयंति। पाश्चात्यसंस्कृत्यान्धानुकरणेन तथा स्वच्छन्दयौनाचारत्वेनास्य भयंकरपरिणामः अस्माकम् समक्षे उपस्थितः, यस्य रोगस्य नामकरणं 'एड्स' इति कृतं तथा च यः सर्व-

प्रथमं पश्चिमदेशेषु प्रादुरभूत् अस्य रोगस्योत्पत्तिः वहुपत्नीत्वेन अर्थात् एकाधिकस्त्रीसम्पर्केण भवति । चेदस्य रोगस्योपचार उचितसमये न क्रियते तर्हि भारतीयाः कीटक्रमिवत् मरष्यन्ति । अस्योपचाराय एक-मेवौषधमेकपत्नीत्वं (पतित्वं) ब्रह्मचर्यंश्च । अस्माकम् भारतीय वैदिकसंस्कृतिः ब्राह्मविधिना परिणयस्य समर्थका । यस्मिन् ब्रह्मचारी पितृऋणमुक्त्यर्थं गृहधर्ममाचरति यथा ब्रह्मचर्यपूर्वकं एकपत्नीत्व प्रतिज्ञां गृह्णाति । यथा –

ब्रह्मचर्यं समास्थाय गृह धर्मं समाचरेत् ।
ऋणत्रयमुक्त्यर्थं धर्मेणोत्पादयेत् प्रजाम् ॥
- स्मृतिः

अत्र वरकन्ये तु लक्ष्मीनारायणस्य स्वरूपौ । पिता कन्यार्थं सुकुलं, कुशलं सुजनं सुशीलं वरं विचार्य तस्मै ब्रह्मलोकाबाप्तिकामनया कन्यादानं करोति ज्योतिर्विदादिष्टे शुभमुहूर्ते :–

कन्या लक्ष्मी समाख्याता वरो नारायणः स्मृतः ।
तस्मात्कन्याप्रदानेन कृत्वा मे प्रीयतामिति ।

कीदृशी पवित्रास्माकं भारतीयसंस्कृतिः यस्यां पिता देवाग्नि गुरुब्राह्मणसविधे कन्यां प्रयच्छति तथा कन्यावरावपि सुखशान्तिमय जीवनप्राप्तिकामनया मिलित्वा साक्षिदेवतानां होम कुरुतः ।

भारतीय नारी स्व पत्युः दीर्घायुष्यं कामयति द्रष्टव्यः एकः प्रसंगः-
ॐ अर्यमणं देवं कन्या अग्निमयक्षत । स नो अर्यं देव प्रेतामुञ्चन्तु मा यतेः स्वाहा ।१
ॐ इयं नार्य्युपब्रूते लाजानवयन्तिका ।
आयुष्मानस्तु मे पतिरेधन्तां ज्ञातयो मम स्वाहा ।२

इमां लाजानावपाम्यग्नौ समृद्धि करणं तव । मम तुभ्यं च संवननं तदग्निरनुमन्यतामियॐ स्वाहा ।

वरोऽपि तया सह धर्मार्थकाममोक्षकर्माणि कुर्वन् यापनस्य प्रतिज्ञां करोति ।यथा --

गृभ्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टियर्थाऽसः ।
भगोअर्यमा सविता पुरन्धिर्म्मह्यमन्त्वाऽदुर्गार्हपत्याय देवाः ।

ॐ अमोऽहमस्मि सा त्वं सा त्वमस्यमोऽअहम । सामाहम्मस्मि ऋक् त्वं द्यौरहं पृथिवी त्वम् । तावेव विवहावहै सह रेतो दधावहै, प्रजां प्रजनयावहै पुत्रान्विन्दावहै बहून् । ते सन्तु जरदष्टयः, सं प्रियौरोचिष्णू सुमनस्यमानौ । पश्येम शरदः शतं जीवेम शरदः शतम् श्रृणुयाम शरदः शतम् ।।

अतोऽस्माकं श्रुतिस्मृतिपुराणास्सर्वे ब्राह्मविधिना विवाह संस्कारस्य समर्थकः, संयमपूर्णमनुष्यजीवनस्य समर्थकं न तु नर-नारीणां स्वच्छन्दंजीवनस्य । इदमनुकरणेन न काचिद् आधिव्याधि-संभावना । अतः आशास्महे यत् भारतीयाः भोगप्रधानसंस्कृति-अनुकरणम् विहाय त्यागप्रधानसंस्कृतेः अध्ययनं, अनुकरणञ्च करिष्य-न्ति येन चतुर्दिक् शान्तिर्भवेत् तथा भारतवर्षस्य प्रतिष्ठा विश्वस्य नेत्रयोः पूर्ववत् स्यात् :—

एतद्देश प्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वं मानवाः ।।

❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋❋

# पाठकाः प्रार्थ्यन्ते

मान्याः !

नववर्षारम्भो जातः नववर्षशुल्कः प्रेष्यः । पत्रप्रेषणेनापि वार्षिकशुल्कप्रेषणार्थं प्रार्थना कृता किन्तु स्वल्पैरेव महानुभावैः शुल्कप्रेषणं कृतम् । अतः सविनयं प्रार्थ्यंते यत् शीघ्रमेव शुल्कप्रेषणेन सहायता कार्या ।

—— सम्पादकः

# सिरमौरजनपदस्य परिचयः

ओमप्रकाश 'राही' शास्त्री

आचार्य एम. ए., एम. फिल..



## प्राक्स्वतन्त्रता कालीन इतिहास -

सुरम्य–पर्वश्रृंखलानाम् क्रोड़े स्थितः सिरमौरः स्व समृद्ध-सांस्कृतिक परम्पराभ्यस्तथा च धार्मिकपर्यटनस्थलेभ्यः न केवलं हिमाचले एवापितु समग्रेऽपि देशे सुविख्यातोऽस्ति । सिरमौरस्यैतिहासः नवशतवर्षपुरातनः स्वीक्रियते । एकस्य पौराणिकाख्यानस्याधारेण १०८२ ई. वर्षे सिरमौरे मदनसिंह नाम्नः सूर्यवंशी राज्ञः शासनमासीत् सिरमौरस्य राजधानी राजवनस्य समीपे 'गिरिनद्यास्तटे' स्थिता आसीत् कथ्यते यत् एका तान्त्रिकी नटी राजानमकथयत् यत् सा नद्याः 'टोका' पोका' श्रृंखलयोर्मध्ये रज्जुं स्थाप्य तदुपरि चलने समर्थाऽस्ति । एतद्दुष्कर कार्यमसम्भवं मान्यमानः नृपः प्रतिज्ञातवान्—यदि सा वस्तुतः एवं विधास्यति तर्हि सः राज्यार्धं तस्यै प्रदास्यति । यदा नटी एतद्दुसाध्यं कर्म साधितवती तदा वचनभीरुः नृपः तां पुनरेवं साधितुम् आदिदेश । यथैव नटी पुनरर्धमार्गं सम्प्राप्ता, राज्ञः सकेतेन तथैव कश्चिज्जन सूत्रमत्रोटयत् । सूत्रात् पतिता नटी राजानम् राज्यनाशेन शशाप । तद्यथानुश्रूयते तत्पश्चात् 'गिरि' नद्यां भीषणः जलाप्लावः समुत्पन्नः येन सिरमोरस्य राजधानी तस्मिन्निमज्य पूर्णतः नष्टा बभूव ।

श्रूयते यत् तत्पश्चात् जैसलमेरस्य राजा सुवंशप्रकाशः १२५२ विक्रम संवत्सरे राजवननाम्नि स्थले पुनः राजधानीमस्थापयत् राजा कामप्रकाशः सिरमौरस्य एकत्रिंशः शासकः अभूत् यः १६२१ ई० वर्षे नाहन स्थले सिरमौरस्य अन्तिमां राजधानीं विनिर्मितवान् । सिरमौर क्षेत्रस्य (रियासतस्य) अन्तिमो प्रशासकः राजेन्द्रप्रकाशः अभूत् यः १९६४ ई० वर्षे दिवं गतः ।

समीपवर्तिषु पर्वतीयक्षेत्रेषु वरिष्ठस्थानकारणेन सम्भवतः क्षेत्रस्यास्य नाम सिरमौर' अभवत् । एकया अन्यधारणया रसालू' नामा कश्चित् राजा राज्यस्यास्य अन्वेषणमकरोत् तथा च जैसलमेरस्य 'सिरमूर' नाम्नि राज्ञि एतस्य राज्यस्य नामकरणमभवत् । एवं

मन्यते यत् राज्ञः मदनस्य काले राजधानी 'सिरमूर' नाम्नि स्थाने आसीत्, येन कालान्तरे समग्रस्यापि राज्यस्य नाम 'सिरमौर' अभवत्। (हिम प्रस्थ जुलाई १९९०, राजेन्द्र राजन — सिरमौर एक परिचय, पृष्ठ ४१—४२)

स्वतन्त्रता संग्रामे सिरमौरस्य योगदानम् :—

"सर्वं परवशं दुःखम्" इति नियमानुसारं पराधीनता पीड़िताः भारतीयाः यदा स्वतन्त्रतायै प्रायतन्त तदा पञ्चाम्बुप्रदेशस्य क्रान्तिकारिभ्यः प्रेरणामादाय सिरमौरक्षेत्रेऽपि १९२० ई० वर्षे एकं गुप्त संगठनं निर्मितम्। एतस्य संगठनस्य नेतारं चौधरी शेरजंगम् आङ्गल सर्वकारः कारागारेऽक्षिपत्। १९३९ ई० वर्षे सिरमौर क्षेत्रे प्रजामण्डलस्य स्थापना कृता। अस्मिन् प्रजामण्डले सर्व श्री शेरगंज-शिवानन्द रमौल-देवेन्द्र सिंह-नागेन्द्र सिंहादिभिः महत्वपूर्णं योगदानं प्रदत्तम्। १९४२ ई० वर्षे 'पझौता आन्दोलनम्' सञ्जातम्। आन्दोलनेऽस्मिन् वैद्य श्री सूरतसिंह-माठाराम-तथा चानयोः पत्न्योः सुनहरी देवी—आलमो-देवी एवं च दीपराम दयारामादीनां नामानि उल्लेखनीयानि सन्ति। एतस्य आन्दोलनस्य द्विपञ्चाशत् क्रान्तिकारिभ्य. आजीवनं कारावासस्य दण्डं प्रदत्तम्। १९४७ वर्षस्य अगस्त मासस्य पञ्चदश तारिकायां वैद्य सूरतसिंह - बस्तीराम पहाड़िया—चेतसिंहादिभिः प्रथम स्वतन्त्रता दिवसस्य प्रसन्नता कारागृहे एव प्रकटिता।

देशः स्वतन्त्रः अभूत, किन्तु तथापि पर्वतीयराज्येषु (रियासतेषु) राज्ञामेव शासनमासीत्। एतद्राजप्रशासनं दूरीकर्तुं तथा च पूर्णस्वतन्त्रतां प्राप्य देशे लोकतन्त्रं स्थापयितुम् आन्दोलनानि तीव्राणि अभूवन्। एषु महत्वपूर्णं योगदानाय नाहनतः पं० राजेन्द्रदत्तजगमोहन रमौल-लाला रामनाथ सुमेरचन्द रेणुकातः हृदयराम पान्थ बूटीनाथादीनां नामानि स्मरणीयानि सन्ति। फलतः एकत्रिंशत पर्वतीय-राज्यैः सह १९४८ वर्षस्य अप्रैल मासस्य १५ तिथौ सिरमौरक्षेत्रस्य विलयः हिमाचल प्रदेशेऽभूत्। तदा प्रभृति एषः पूर्णजनपदस्तिष्ठति। १९५२ ई० वर्षे हिमाचलस्य प्रथमे मन्त्रिमण्डले सिरमौर जनपदीयः डा० यशवन्तसिंह परमारः मुख्यमन्त्रिपदं प्राप्य चिरकालपर्यन्तं पदमिदम् व्यभूषयत।

वर्तमानस्वरूपम् :—

भौगोलिकदृष्ट्या सिरमौरस्य उत्तरे शिमला, पूर्वे देहरादून, दक्षिणपश्चिमयोः अम्बाला तथा च उत्तर-पश्चिमयोः सोलनस्य

सीमाः सिरमौरं स्पृशन्ति । प्रशासकीयदृष्ट्या एषः जनपदः नाहन – पांवटा – राजगढ़ उपमण्डलेषु विभक्तोऽस्ति । नाहन-रेणुका - शिलाई - पांवटा पच्छाद - राजगढ़ चेति षट् उपमण्डल क्षेत्राणि सन्ति। प्रायेण २८२५ वर्ग किलोमीटर परिमिते क्षेत्रे विस्तीर्णस्य सिरमौर जनपदस्य चतुर्लक्षसंख्यकेषु जनेषु नवतिः प्रतिशतम् जनाः ग्रामेषु निवसन्ति। 'गिरी' नदी अस्य जनपदस्य प्रमुख सरिदस्ति । सिरमौरवासिनः, इमां 'गंगा' इव पवित्रां मन्यन्ते । 'यमुना' नदी सिरमौरस्य प्रायेण २२ किलोमीटर क्षेत्रे वहति।

## जनानां व्यवसाय :-

अत्रत्यानां जनानां प्रमुखः व्यवसायः कृषिरस्ति । अत्राधिकाः जनाः कृषिं कुर्वन्ति । जनाः क्षेत्रेषु गोधूम - यव - चणक-सर्षप - धान्यानि वपन्ति। केषुचित् क्षेत्रेषु जनाः प्राचीनानि (कोदा 'चोलाय' 'शांवक' 'फावणी') आदीनि अन्नान्यपि वपन्ति । आलू-आर्द्रकादीनां कृषिं विधाय जनाः स्व आयाभिवृद्धि विदधति। उन्नतेषु स्थलेषु सेब फलानां निम्नवर्तिषु च स्तलेषु आडुक - आलूर बाताद - नारंगस्य-नेकजातिफलानाम् उद्यानानि सन्ति । समयानुसार केचन जनाः सर्वकारीयाः सेवा केचन च उद्यानेषु कार्यं कुर्वन्ति । सर्वकारसहयोगेन युवान. स्वीयानि उद्योगान्यपि स्थापयन्ति ।

## प्राकृतिकसुषमाया आकरः –

सिरमौरस्य प्रत्येकमपि खण्ड प्राकृतिकसुषमायाः अप्रतिम नैसर्गिक· छटायाश्च निरुपममुदाहरणमस्ति । चोड़ देवदार-शाल बान बुरासादीनां सघनानि वनानि अस्य शोभां वर्धयन्ति जनपदस्य उन्नतेषु शिखरेषु यदा हिमपातः भवति तदा शिखराणि सुधालिप्तानीव प्रतीयन्ते । कलकल - निनादेन प्रवहमाणाः प्रपाताः कमपि नवागन्तुकं सर्वथा आकर्षन्ति ।

## धर्म आस्था, मेलकाः, उत्सवाश्चः-

सिरमौरे वैष्णवमतस्य तथा च शैवमतस्य उभयोरेव धार्मिकविचरयोः समर्थकाः जनाः सन्ति। रामकृष्णाभ्यां सहात्र भगवतः परशुरामस्य आराधना क्रियते । जनपदे जमदग्निरेणुकयोः सुतस्य परशुरामस्य विशिष्टं स्थानमस्ति । शिवस्यावताररूपः 'शिरगुल' देवः शैवमतानुयायिनां मानसेषु निवसति। चूड़ेश्वरमहाराजस्य शिरगुलस्य प्राचीनः प्रमुखः देवालयः अत्युन्नते 'चूड़धार' अरण्ये पर्वतशिखरे स्थितोऽस्ति। 'शाया' नाम्नि शिरगुलस्य जन्मस्थलेऽपि प्राचीनं देवमन्दिरं विद्यते ।

एतदतिरिक्तं सिरमौरस्य अन्येषु स्थलेष्वपि शिरगुल मन्दिराणि सन्ति। शिरगुल - चन्देश्वर - बिजट - थान - गण-महासू-प्रभृतयः अन्नत्याः लोक देवाः सन्ति, येषां मन्दिराणि जनपदस्य शोभां तन्वन्ति ।

सिरमौरजनपदः मेलकोत्सवपर्वेभ्यः तथा च एभिः सम्बद्धाभ्यः धार्मिक आस्थाभ्यः सुप्रसिद्धोऽस्ति । प्रत्येकस्मिन् वर्षे (नवम्बर) = कार्तिक मासे आयोज्यमानः 'रेणुका' मेलकः सिरमौरवासिनां पारम्परिक धार्मिक आस्थायाः प्रतीकोऽस्ति । एषः मेलकः भगवन्तं परशुराम प्रति जन श्रद्धाम् आस्थाञ्चापि प्रकटयति राज्यस्तरीय एषः मेलकः न केवल हिमाचले एव अपितु भारतस्य अन्येष्वपि राज्येषु सुविख्यातोऽस्ति।

नाहनतः २२ किलोमीटरदूरे त्रिलोकपुरनाम्नि स्थले विद्यमानं 'बाला सुन्दरी' मातुः मन्दिरमसंख्यानां श्रद्धालूनामाराध्यस्थलं विद्यते। चैत्र आश्विन मासयोः नवरात्रेषु अत्र मेलकः लगति यत्र परस्सहस्राः भक्ताः देव्याः दर्शनायागच्छन्ति ।

गुरोः गोबिन्दसिंहस्य साधनास्थलं 'पांवटा' सुविशाल - रमणीय-गुरुद्वाराय विख्यातमस्ति। 'होला' 'वैशाखी' मुख्यमुत्सवद्वयं विद्यते । विगतेभ्यः कतिपयवर्षेभ्यः 'यमुनाशरदोत्सवः' पांवटास्थलस्य सांस्कृतिक परम्परायाँ नवीनमध्यायमयाजयत् ।

'बूढ़ी दिवाली' 'मशराली' बिशु' 'पौषी त्योहार' 'हरियालटी' 'साजा' 'सगरांद' आदीनि अत्रत्यानि प्रमुखानि स्थानीयपर्वाणि सन्ति । एषु पर्वेषु जना. विशिष्टानि भोजनानि कुर्वन्ति, गायन्ति, नृत्यन्ति च । 'आटा-असकलीसीड़ - लुश्के - धरोटी - शुचावले - पटंडा - खोबले 'आदीनि, सिरमौरस्य विशिष्टानि खाद्यानि सन्ति, यानि जनाः पर्वेषु अथवा अतिथिभ्यः निर्मान्ति ।

## लोकनृत्यानि:-

'कग्याला' गी' 'रासा' 'नाटी' आदीनि सिरमौरस्य लोकप्रियाणि लोकनृत्यानि सन्ति । मेलकेषु पर्वेषु, उत्सवेषु च यदा युवानः युवतयश्च एषु लोकनृत्येषु नृत्यन्ति तर्हि दर्शकाः मुग्धा इव तिष्ठन्ति । अत्रत्येषु लोकनृत्यपरम्परागीतेषु समृद्ध - रागात्मकसांस्कृतिक न्यासस्य दर्शनानि भवन्ति ।

परिवर्तनशीलसमयस्य परिवर्तनशीलतायां परिवर्तमानः सिरमौरः विविधाभि विकासप्रक्रियाभिः विकसितः दरीदृश्यते । अहमेतस्य सर्वाङ्गीणविकासाय कामये ।

रा० व० मा० वि० —राजगढ़ १७३१०१
(सिरमौर, हि० प्र०)




# दिल्ली संस्कृत अकादमी

## संस्कृतविकासे सर्वभाषाविकासः

श्री शान्ताकुमारः



११—२—१९९२ तिथौ दिल्याः लिटलथियेटर सभागारे विद्यालयीयसंस्कृतनाट्यसमारोहसमापनावसरे मुख्यातिथित्वेन भणितम् ''संस्कृतमस्माकं प्राचीनतमा भाषा। इयं वैदिकभाषा भारतीयसंस्कृत्याः परिचयरूपा। सर्वाः भाषाः संस्कृतप्रसूताः। अतः संस्कृतविकासे सर्वभाषाविकासः। विजयेतृविद्यालयेभ्यस्तेन पुरस्कारवितरणमपि कृतम्। एवं विधकार्यैः संस्कृतप्रसारकार्यं वर्धते इत्यपि स आह अकादमीकार्यञ्च प्रशशंस।

दिल्लीप्रशासनस्य वित्तायुक्तः श्री सेवारामोऽप्यत्र अध्यक्षतां कुर्वन् संस्कृतभाषोत्थानाय शैक्षणिकसंस्थासु संस्कृतस्य प्रचारावश्यकतामाह। अस्य नाट्यसमारोहस्योद्घाटनं दिल्लीप्रदेशस्य शिक्षानिदेशकः श्री वी. पी. सूरी कृतवान्।

| मञ्चनकर्तारः | संस्कृतनाटकानि |
|---|---|
| १. डी.टी.ई.ए उ.मा. विद्यालय पूसारोड दिल्ली | १. उत्तररामचरितम्। |
| २. रा. उ. मा. कन्याविद्यालयः नं० २ भोलानाथ नगरम् | २. स्वप्नवासवदत्तम्। |

३. राजकीय संयुक्त आ. उ. मा. कन्या वि. नांगलोई — ३. वेणीसंहारम्

४. बालभारती पब्लिक स्कूल पीतमपुरा — ४. शाकुन्तलम्

५. रा. सं. प्रा. स. शि. उ. मा. वि. सैक्टर—१२ आर. के. पुरम् — ५. मृच्छकटिकम् ।

एषु संस्कृतनाटकेषु ७मकक्षात: द्वादशकक्षापर्यन्तं शिक्षणसंलग्न-छात्रैरेव भागो गृहीतः । प्रत्येकनाटकस्य विजयिपात्रेभ्य: क्रमशः पञ्चपुरस्काराः प्रदत्ताः । १मपुरस्कार: ५०० रु. २यपुरस्कार: ४०० रु. ३यपुरस्कार: ३०० रु. चतुर्थ पुरस्कार: २०० रु. पञ्चम पुरस्कारश्च १०० रु. आसन् । सर्वैः अकादम्या: श्री कृष्णसेमवालस्य च प्रयासाः प्रशंसिताः ।

—

# संस्कृतपाण्डुलिपि प्रकाशनार्थिकसाहायदानम्

दिल्ली १२-२-९२ अकादम्यां: संस्कृतपाण्डुलिपिप्रकाशनयोजना-धीनम् शतपृष्ठात्मक पाण्डुलिपि कृते २००० सहस्राणि इतोऽधिक-पृष्ठात्मकपुस्तकाय च ५००० सहस्ररूप्यकाणां दानाधार: – आसीत् । एतदनुसारं चत्वार: पाण्डुलिप्य: सम्मानिता: ।

| लेखका:— | | पुस्तकानि:— |
|---|---|---|
| १ श्री धर्मवीर शास्त्री | ... | माल्यार्पणम् |
| २. श्री मधुर शास्त्री | ... | बालुकैः...? |
| ३. श्री ओं प्रकाश ठाकुर: | ... | गीतिमञ्जरी । |
| ४. डा. कुंवरलाल जैन: | ... | वैदिकयज्ञविद्या । |

एष: समारोह: सामन्त भद्र संस्कृतमहाविद्यालय दरियागंजे जात: । राष्ट्रीयसंस्कृतसंस्थानस्योपनिदेशका डा. मधुसूदनमिश्रमहोदया: मुख्यातिथय आसन् । निदेशका डा. सुबोधपन्तमहाशयाश्च अध्यक्षता-मकुर्वन् ।

——

# धर्मस्य शाश्वतमूल्यानि राजनीतिश्च
## (परिचर्चा)

१४-२-९२ दिल्यां विषयोऽयं चर्चितः। अस्याः गोष्ठयाः अध्यक्षता इलाहाबादविश्वविद्यालयस्य भौतिकशास्त्रविभागस्य पूर्वाध्यक्षेण प्रा. राजेन्द्रसिंहेन कृता। मुख्यातिथिरासीत्—उत्कलप्रदेशस्य पूर्वराज्यपालः श्री वी. एन. पाण्डेयः। पाण्डेय उवाच—यद्दशकं धर्मलक्षणं शास्त्रेषु वर्णितं तस्य परिपालनं यदि भवेत्तदा देशे विदेशेषु वा क्वापि कोऽप्यपराधो न भवेत्। अद्यतना राजनीतिः पूर्णदूषिता। तस्या उद्धार एभिर्विना न भविष्यति। नैतिक मूल्यसंरक्षणेनैव वयं स्वकीयस्वातन्त्र्यं रक्षितुमर्हाः।

प्रा. राजेन्द्रसिंहः प्रावोचद्यत्। मानवधर्म एव वास्तविको धर्मः। राजनीतौ धर्ममूलता यदि न भविष्यति तदाऽनेकसमस्याः समुत्पन्नाः भविष्यन्ति। राजनीतौ—अनैतिकतायाः सन्निवेशः परिहर्तव्य एव सुप्रसिद्धपत्रकारः श्री अक्षयकुमारजैनः, प्रसिद्धस्वतन्त्रतासेनानी श्री मन्मथनाथ गुप्तः, स्वामी गोकुलानन्दः, पूर्व संसद् सदस्यश्च श्री रामचन्द्र विकलः एभिरपि पूर्वप्रकटितविचारधाराया एव पोषणं स्वभाषणेषु कृतम्।

दिल्याः पूर्वकार्यकारीपार्षद् श्री कुलानन्दभारतीयः शैलेश मटियानी, डा० मण्डनमिश्रः, डा. सुरेशचन्द्र वत्सः, डा. सत्यव्रतः शास्त्री, डा. वी. पी. खुल्लरः, डा श्रीमती कुप्पु स्वामी, डा, स्वदेश अरोड़ा, डा. वाई. डी. शर्मा, डा. पंचोली, सेन्टस्टीफन कालेज प्राचार्यः, डा. विल्सनः इत्यादिभिरपि स्वविचाराः प्रकटिताः।

दिल्ली प्रशासनस्य वित्तायुक्तः अकादम्याः कार्यसमित्या अध्यक्षश्च श्री सेवाराम शर्मा गोष्ठ्या विषयप्रस्तुतीकरणमकरोत् दिल्ली संस्कृतअकादमीसचिवः श्री कृष्णसेमवालः सर्वेभ्यः स्वागतं व्याजहार।

डा० मधुसूदनोऽवादीत् यदनया योजनया संस्कृत लेखकाः प्रोत्साहनं प्राप्स्यन्ति। श्री सुबोधचन्द्रपन्तोऽपि एवमेव स्वविचारान् प्राकटयत्। अकादमी सचिवः प्राकाशयत् यदग्रिमवर्षेऽनुसंधानात्मकपाण्डुलिप्योऽपि प्रकाशनसाहाय्यं प्राप्स्यन्ति। परन्तु लेखकैः महत्वपूर्णं समाजोपयोगिरचना करणीया इत्यपि तस्य विचारः आसीत्।

# १२५४ संस्कृतछात्रेभ्यः (बालबालिकाभ्यः)

## लक्षत्रयरूप्यकाणां पुरस्काराः प्रदत्ताः

दिल्ली १५-२-९२ दिवसे एकस्मिन् समारोहे १२५४ छात्र-छात्राभ्यः लक्षत्रयस्य पुरस्काराः प्रदत्ताः । एते स्कूलेषु, संस्कृत-पाठशालासु महाविद्यालयेषु च समायोजितासु विभिन्नसंस्कृतप्रतियो-गितासु अर्जितविजयेभ्यश्छात्रेभ्यः प्रदत्ताः । मुद्रापुरस्कारेण साकं वैजयन्त्यः, प्रतीकचिन्हानि, प्रमाणपत्राणि चापि दत्तानि ।

पुरस्कृतेषु छात्रेषु द्वौ मुस्लिमौ, षड्त्रिंशत् सिक्खाः, १/३ अल्पसंख्यकाः, १४% अहिन्दी प्रान्तीयाः आसन् । अस्मिन् वर्षे दिल्याः स्कूल-कालेज-संस्कृतविद्यालयादिषु श्लोकोच्चारण—भाषण — कवित्व — संस्कृत-संगीत — संस्कृतछात्रवृत्ति - संस्कृतप्रतिभापुरस्कारप्रतियोगितायोजन-मकारि अकादम्या । आसु दिल्याः सहस्रत्रयछात्रैर्भागो गृहीतः । तेषु १२५० बालक-बालिकाः विजयिनः समुद्घोषिताः ।

आयोजनम् - इफको सभागारे जातम् । राज्यशैक्षणिक-अनुसंधान-प्रशिक्षणपरिषदः संयुक्तनिदेशकः श्री वयू. एल बंगा समारोहस्याध्य-क्षतामकरोत् । प्रशासनस्य शिक्षासंयुक्तसचिवश्च श्री एम. के. मिश्र-महोदयः मुख्यातिथित्वं समलंचकार । अस्याः भाषायाः पठनपाठनोपरि विशेषतया कार्यकरणाय सर्वैर्भाषितम् ।



# संस्कृतभाषा अस्माकं गंगा

दिल्ली २४-२-९२ दिल्ली संस्कृत अकादम्या आयोजिता एका अकादमीसहयोगिनां सम्मानाय, संगोष्ठी अध्यक्षताऽत्र दिल्ली-परिषदः पूर्वपार्षदेन श्री कुलानन्दभारतीयेन कृता । मुख्यातिथित्वं च दिल्याः पूर्वमुख्यकार्यकारिपार्षदेन श्री जगप्रवेशचन्द्रेण गृहीतम् । एतदवसरे तेन "संस्कृतभाषा भारतस्य सर्वभाषास्रोतो भूता कथिता । यदि सेव शुष्कतां गता तदा सर्वा अपि भारतीयभाषाः समाप्तिमेष्यन्ति तस्याभावे" इति तेनाभाणि । संस्कृत अकादम्याः कार्यसाफल्याय यैः पूर्वं सहयोगोऽत्र कृतस्ते संस्कृतानुरागिणः, संस्कृतज्ञाः, तथा चाधिका-

रिणः सम्मानिताः । तेभ्यः शालः, प्रतीकचिन्हम् प्रशस्तिपत्रं च सर्वेभ्यः प्रदत्तमभूत् । ये सम्मानिताः--

दिल्लीप्रशासनस्य शिक्षानिदेशकः--श्री बी. पी. सूरी, शिक्षाधिकारीः— डा. सरोज बंसलः । प्राचार्यौ, डा. जे. पी मिश्रः तथा ग० चंलवः । पूर्व प्राचार्यः श्री रमेशचन्द्र अवस्थी, श्रीमती चंचल जग्गी । आचार्य विद्यानिधि पाण्डेयः, आचार्य श्रीधरप्रसादः आचार्य रामसेवक शर्मा, आचार्य मदनमोहन जोशी च । सर्वेषां मुख्यविचारोऽयमासीत् यत् संस्कृतभाषा पुराणो हिमालयः । इयं सर्वान् बध्नाति न च खण्डयति पूर्वरक्षासचिवः डा के. पी. ए. मेननमहोदयोऽपि — उपस्थितः आसीत् ।

## संस्कृतविद्वांसः संस्कृतसेवासम्मानेन मानिताः

### ११-३-९२ दिल्ली, प्रशासनस्य संस्कृतपरिषदा

### (अकादम्याः)

'संस्कृत सेवा सम्मान' योजनान्तर्गताश्चत्वारः संस्कृतस्य विद्वांसो विदुष्यश्च सम्मानिताः । मानितेभ्यः एकादशसहस्र रूप्यकाणि, एक. शालः, प्रतीकचिन्हं प्रमाणपत्रञ्चेति उपायनी कृतम् । दिल्ली विश्वविद्यालयीयः संस्कृतस्य आचार्यः डा० सत्यव्रतः शास्त्री, इन्द्रप्रस्थकालेजे संस्कृतस्य वरिष्टप्राध्यापिका, श्रीमती सुशीला अम्बिके दौलतरामकालेजस्य पूर्वप्राचार्या डा० सीताकृष्णनम्बियार तथा च विश्वनाथ संस्कृतमहाविद्यालय दिल्यांः साहित्यविभागाध्यक्षः श्री थानेशचन्द्र उप्रेतिः एते सम्मानिताः ।

दिल्ली प्रशासनस्य वित्तायुक्तः श्री सेवाराम शर्मा मुख्यातिथिरासीत् । अत्र अध्यक्षता पूर्वरक्षासचिवेन (भारतस्य श्री के. पी. ए. मेनन् महाभागेन कृता । वित्तायुक्तः प्रावोचद्यत् संस्कृतं भारतस्य आत्मनः भाषा वर्तते भारतज्ञानाय संस्कृतज्ञानमपेक्ष्यते । अतः सर्वैरत्र भाषाप्रचाराय सर्वविधसहयोगो देयः । डा० मण्डनमिश्र महोदयाः विशिष्टातिथयः— आसन् । अकादमीसचिवानुसारं १९८७--८८ काले

योजनेयं प्रचालिता । प्रतिवर्षञ्च चत्वार: संस्कृतज्ञा: संस्कृतसेवायै सम्मानमर्हन्ति ।

इति दिल्लीसंस्कृतअकादमीसमाचारा:



## लोकार्पणम्

२८-२-९२ तिथौ मैत्रेयी महाविद्यालये संस्कृतप्रवाचिकाया डा० शशिप्रभा कुमारमहाभागाया: प्रणीतस्य तथा च दिल्ली विश्वविद्यालय-द्वारा प्रकाशितस्य शोधग्रन्थस्य (वैशेषिक दर्शन में पदार्थ निरूपण) इत्यस्य लोकार्पणं आचार्य विद्यानिवासमिश्रेण वाराणसेयसंस्कृत विश्वविद्यालयकुलपतिना कृतम् इति सूचयत: वाचस्पति उपाध्याय: प्रभारी आचार्यं:, तथा च आचार्य कृष्णलाल: संस्कृत विभागाध्यक्ष: ।



## कम्प्यूटरे संस्कृतनिवेशाय अशीतिलक्षरूप्यकाणां स्वीकृति:

दिल्ली । लोकसभायां श्री मार्ग्रेट अल्वा मन्त्रिणी प्रावोचद्यत् कम्प्यूटरे संस्कृतसंयोजनाय अशीति लक्षरूप्यकाणि स्वीकृतानि । द्रविड-मुनेत्र कडगम दलस्य सदस्यै विरोधोऽयं कृतो यत् संस्कृतस्य वचस्ववृद्धि कृते प्रशासनं कार्यं कुरुते ।

---

## ज्वालामुखी नगरे वैदिकसम्मेलनम्

शिमला । ज्वालामुखी नगरे अ० भा० वैदिकसम्मेलनमायोजितम् मार्चमासस्य २७ दिवसे । आचार्यै सम्मेलन सफलतायै शुभाशिष: प्रेषिता । प्रदेश शिक्षामन्त्री श्री राधारमण शास्त्री अध्यक्षतां चकार ।

---

साहित्य समीक्षा

## श्रीरामकीर्तिकाव्यम्

प्रणेता :— डा. सत्यव्रतः शास्त्री

मूल्यम् :— ४२५ रूप्यकाणि

प्राप्ति स्थानम् :— रूपनगरम् दिल्ली-६ ।

थाइरामकथामाश्रित्य प्रणीतमिदमभिनवं संस्कृतमहाकाव्यम् । को नाम भारतीयः प्राच्यविद्याविन्न जानाति नूतनपाणिनीयानाम् स्व० श्री चारुदेव शास्त्रिमहाभागानां सुपुत्रं श्री सत्यव्रतशास्त्रिणम् । अयं किल दिल्लीविश्वविद्यालय संस्कृत विभागाचार्यः, पुरीस्थ श्रीजगन्नाथ संस्कृतविश्वविद्यालय प्राक्तनकुलपतिः, थाइदेशस्थबैंकाक नगरे शिल्पाकरविश्वविद्यालये प्राच्यभाषाविभागेऽभ्यागताचार्यः स्वदेशीय विदेशीय संस्कृत संस्थाभिः सर्वदा सम्बद्धः श्री सत्यव्रत शास्त्री श्रीरामकीर्तिमहाकाव्यम् निर्माय समस्तमानवसमाजस्य विशेषतश्च भारतीयानां महदुपकारमकरोत् । लेखकेन यद्यपि संस्कृतेऽनेकाः—मौलिक्यः—अनुसन्धानपराश्च रचनाः कृतास्तथापि काव्यमिदं स्वर्णसुगन्धयोगवत् - स्वीयं किमप्यवर्णनीयमहत्वं धारयति ।

अस्य काव्यस्य प्राक्कथन लेखिका थाइदेशमहाराजकुमारी देवरत्नराजसुता महाचक्री सिरिन्धौर्न् वर्तते प्रकाशनञ्चास्य महाकाव्यस्य बैंकाक नगरे एव प्रायेण जातम् । सार्धपञ्चशतपृष्ठात्मकमिदं काव्यं स्थूले, चिक्कणे च कर्गजे मुद्रितम् । आवरणं स्थूलं सुदृढ़ञ्चास्ते । बाह्यावरणन्तु कामप्यभूतपूर्वां शोभां प्रकटयति । मध्ये २ बहुरंगीय-

रामकथा सम्बन्धि-थाइदेशमूर्तिचित्राणि काव्यमिदं चतुश्चन्द्रयुतं कुर्वन्ति।

काव्ये न क्वापि मुद्रणत्रुटिर्गोचरतां गता। नयनाल्हादकाक्षराणि नातिसूक्ष्माणि नापि चातिस्थूलानि। पञ्चविंशति सर्गात्मकमिदं काव्यम्। अनेन एशियाखण्डस्य कतिपयदेशेषु रामकथाप्रसृता वर्तते। विदेशीयरामायणस्य संस्कृतभाषायां संस्थापनाया अयं प्रथमः प्रयासो भारतीयेन कृतः।

काव्येऽस्मिन् - छन्दः प्रयोगः, महाकाव्यगतगुणसन्निवेशः, रचना-प्रौढता, रसपरिपाकादयः सर्वेऽपि गुणाः पूर्णतां प्रापुः। सर्वाधिकगुणवत्ता-ऽस्य वर्तते हृदयस्पर्शिवर्णनम् पठ्यतां तावत् - रामराज्यवर्णनम् :—

संयोजिते देवसभे तदानी
मिन्द्रादयो देवगणा अवोचन्।
सर्वत्र वार्तं भगवन्नवेहि
कुत्राप्यशान्तिर्न च विग्रहःस्तः॥
श्री राघवेन्द्रेण जिताः प्रविष्टा
रक्षोऽधमा मूषकवद्बिलेषु।
सूर्योदये सन्तमसं यथैव
तथैव ते दूरत एव नष्टाः॥

सर्वत्र शान्तिः परिलक्ष्यतेऽत्र
श्री रामराज्ये तु कुतोऽन्यथा स्यात्।
"सूर्ये तपत्यावरणाय दृष्टेः
कल्पेत लोकस्य कथं तमिस्रा।"

एवं किल विशालस्यास्य महाकाव्यस्य यावती अपि प्रशंसा क्रियेत सा स्वल्पा एव। रसिकैः स्वयमस्यास्वाद. ग्राह्यः। भारतस्य प्रत्येक पुस्तकालयेषु संस्कृतज्ञानां पार्श्वे चास्य स्थितिरावश्यकी। रामकथावत्—इदं रामकाव्यमपि विश्वस्य कोणानुकोणं ख्याति माप्स्यतीति नात्र कोऽपि सन्देहः। प्रश्नोऽयं वर्तते यद्वयं भारतीया-विशेषतश्च संस्कृतज्ञाः कथं स्वकवीनां रचनासम्मानं कुर्मः।

— केशव शर्मा



सम्पादकीयम्

## अ. भा. संस्कृतपत्रकारसम्मेलनम्

उक्तसम्मेलनं अ. भा. सं. पत्रकारमहासंघाध्यक्षाणां कर्णाटकराजधान्यां बेंगलौरनगरे शारदाकाराणां श्रीबसन्तअनन्तगाडगीलमहाभागानां सत्प्रयासैः श्रीशृंगेरीशारदापीठशंकराचार्याणां श्री श्री भारतीतीर्थ-महास्वामिनां शुभाशीर्वादैः अप्रैलमासस्य ७—८ दिवसयोः साफल्येन जातमिति हर्षान्वितोऽस्मि ।

---

## अस्माकं नैतिकपतनम्

स्वतन्त्रताप्राप्तिकाले यैर्महानुभावैरत्युत्कटसंकटानां साम्मुख्यं कृतं, स्वजीवनपरित्यागो विहितः, स्वगृहाणामवपातः सोढस्तेषां मनसि केवलं विचारद्वयमासीत् । भारतीयानां सांस्कृतिकमार्थिकस्वच्छन्दता ।

प्रशासनमस्माकं हस्तेषु समायातम् । प्रशासनाधीनं भवति आर्थिक-सुधारः, वैचारिकी प्रगतिश्च । आर्थिकदृष्ट्या देशस्याधःपातो जातः भ्रष्टाचारकारणात् । भ्रष्टाचारस्य मूलमस्ति विचारदोषः । शिक्षायामेव भ्रष्टाचारोऽस्माकं देशे बाहुल्येन प्रसृतस्तेन च भ्रष्टाचारवृद्धिः । भ्रष्टाचारो-ऽस्ति मूलम्—देशस्य निर्धनतायाः देशस्य रोगबहुलतायाः, अस्वस्थसमाजस्य च । एकतोऽस्माभिः पाश्चात्यपद्धत्या अन्धानुकरणं क्रियतेऽपरतश्च वयं देशे दुखं समृद्धिञ्च द्रष्टुमिच्छामः ।

असंख्यानुपमेयचिकित्सासाधनेषु सत्स्वपि—अमेरिकादिदेशाः (एड्स-कैंसर) यौनावुद्धमस्तिष्कविकृति—रोगैस्तथा चान्यैर्नवीनैः नवीनैः रोगैरतितरां प्रपीड़िताः सन्ति । पर्यटनमाध्यमेन एतद्व्याधिजातं देशेऽस्मदीयेऽपि प्रवेशं प्राप्नोति । परन्तु प्रशासनं नक्तं दिवं पर्यटनसुविधादानाय विदेशिजनानां भारतप्रवेशाय चाकुलं वर्तते । विद्यालय - महाविद्यालयः विश्वविद्यालयेभ्य एव स्वच्छन्दयौनप्रवृत्तिर्वर्धमाना दृश्यते । एतस्य सर्वस्य कारणमस्ति—अर्थ-प्रधानता । यद्यपि भारतीयशास्त्रेषु अर्थप्रधानता स्वीकृता वर्तते । तस्याः प्रावल्यं शास्त्रकाराः स्वीकुर्वन्ति परन्तु तदुपरि - अंकुशमपि तादृगेव दृढ़-मासीत् - धर्मस्य । अद्य वयं धर्मं परित्यज्य अर्थमेव मुख्यमिति भ्रमपतिताः स्वयमपि गर्तेऽहर्निशं प्रपतामो नात्र सन्देहः ।

अधुनापि समयोऽस्ति । दशकचतुष्टये पाश्चात्यान्धानुकरणस्य फलं दृष्ट्वा भारतीयसमाजेन स्वोत्थानप्रयासाः कार्यास्तत्कृते च भारतीय शास्त्र-गुणाः ग्राह्याः । दोषाः त्याज्याः, संस्कृतानुसन्धानं कार्यं, भारतीयेतिहास-राजनीति - अर्थशास्त्रचिकित्सा - कामशास्त्रादीनां कृतेऽपि च समुचितस्थानं देयम् । तदैव देशस्य कल्याणं नान्यथा ।

— केशव शर्मा

मुद्रकः प्रकाशकः :—
भारतीमुद्रणालय भारती विहार, मशोब्रा - शिमला १७१००७ (हि. प्र.)
स्वामी:— श्रीमती आचार्य रत्नकुमारी शर्मा,
दूरभाषः [ 78459 8-200 ]
अप्रैल, १९९२ वैशाख: २०४९ वर्षम् ३६ अङ्कः ७
वार्षिक मूल्यम् ३५ रु०

R. N. 6384/57 ल– 33/एस. एम. / 10/91

# संस्थान के प्रकाशन



१. फलादेश कल्पतरुः (मूल संस्कृत में)
हिन्दी अंग्रेजी टीका सहित ४० वर्ष के अनुसन्धान और अनुभव पर आधारित जातकफल कहने का अनुपम ग्रन्थ ... मू. ७०-००

२. संस्कृत कोशवाङ्मयम् (संस्कृत में)
संस्कृतकोशसाहित्यपर अनुसन्धानपूर्ण विवेचन ... मू. १७५-०

३. झञ्झा (संस्कृत में)
शेक्सपीयर के द टैम्पेस्ट नाटक का सचित्र रूपान्तर ... मू. ५०-००

४. हिमाचलप्रदेशे संस्कृतस्य प्रसारो विकासश्च (संस्कृत में)
हिमाचल में संस्कृत के प्रसार विकास की विस्तृत कहानी ... मू. ५०-००

५. वैजयन्ती (हिन्दी काव्य)
नवीन प्राचीन विचारधाराओं का गीतिमय समन्वय ... मू. १५-००

६. सूनृता (संस्कृत काव्य)
आधुनिक गीतों में गुम्फित अनुपम उपहार ... मू. २५-००

७. शक्तिसौरभ (हिन्दी में)
संस्कृत लेखिकाओं का इतिहास ... ... मू. १५-००

८. विचारामृत (हिन्दी में)
आचार्य जी के विभिन्न विषयों पर जीवनोपयोगी लेख दो भाग मू. १५-००

९. पथ्यापथ्यविनिर्णय
सं. हि. टीका सहित आयुर्वेद का दुर्लभ ग्रन्थ ... मू. २०-००
( डाकव्यय सर्वत्र पृथक् )

१०. सरिता
(अभिनव सं. कथानिकाएं) ... मू. ५० ००

सम्पर्क सूत्र :—
सचिव,
**संस्कृत शोध संस्थान**
भारती विहार मशोबरा
शिमला १७१००७ )हि. प्र.)



